SAPTHAGIRI (SANSKRIT)
ILLUSTRATED MONTHLY
Volume:8, Issue:12
March-2022, Price Rs.5/-
No. of pages-24

तिरुमलतिरुपतिदेवस्थानानि

# सप्तगिरिः

## सचित्रमासपत्रिका

मार्च् २०२२ रू/- ५/-

नागलापुरम्
श्रीवेदनारायणस्वामिनः
सूर्यपूजासान्दर्भिकल्पवोत्सवः
(दि.२४.०३.२०२२ तः २८.०३.२०२२ पर्यन्तम्)




# ओण्टिमिट्ट श्रीकोदण्डरामस्वामिनः ब्रह्मोत्सवः
## एप्रिल् १० तः १८ पर्यन्तम्

१०-०४-२०२२
भानुवासरः
प्रातः - ध्वजारोहणम्
रात्रौ - शेषवाहनम्

११-०४-२०२२
इन्दुवासरः
प्रातः -
वेणुगानालङ्कारः
रात्रौ - हंसवाहनम्

१२-०४-२०२२
भौमवासरः
प्रातः -
वटपत्रशायिनः
अलङ्कारः
रात्रौ -
सिंहवाहनम्

१३-०४-२०२२
सौम्यवासरः
प्रातः
नवनीतकृष्णालङ्कारः
रात्रौ - हनुमत्सेवा

१४-०४-२०२२
बृहस्पतिवासरः
प्रातः - मोहिनी सेवा
रात्रौ - गरुडसेवा

१५-०४-२०२२
भृगुवासरः
प्रातः -
शिवधनुर्बाणालङ्कारः
रात्रौ - आह्वानम्,
कल्याणोत्सवः,
गजवाहनम्

१६-०४-२०२२
मन्दवासरः
प्रातः - रथोत्सवः

१७-०४-२०२२
भानुवासरः
प्रातः -
कालीयमर्दनालङ्कारः
रात्रौ - अश्ववाहनम्

१८-०४-२०२२
इन्दुवासरः
प्रातः - चक्रस्नानम्
रात्रौ -
ध्वजावरोहणम्

# गीतामृतम्




एतान्न हन्तुमिच्छामि घ्नतोऽपि मधुसूदन।
अपि त्रैलोक्यराज्यस्य हेतोः किं नु महीकृते।
निहत्य धार्तराष्ट्रान्नः का प्रीतिः स्याज्जनार्दन।। (३४/१)

श्रीकृष्णं प्रति अर्जुनः वदति, ''हे मधुसूदन त्रिलोकप्राप्त्यै अपि एतान् धार्तराष्ट्रान् हन्तुं नेच्छामि। किं पुनः वक्तव्यं केवलं भूप्राप्तये नेच्छामीति? अतः हे जनार्दन! तान् हत्वा अस्माकं का वा कुत्र वा प्रीतिः भवेत्? अतः तान् मे बन्धून् हन्तुं न शक्नोमि'' इति।

# सङ्कीर्तनम्

ब्रुवन्ति बौद्धा बुद्ध इति
स्तुवन्ति भक्ताः सुलभ इति ।।ब्रुवन्ति।।

गदंन्ति किल सांख्यास्त्वां पुरुषं
पदवाक्यज्ञाः पदमिति च
विदन्ति त्वा वेदान्तिन
स्सदा ब्रह्म लसत्पदमिति च ।।ब्रुवन्ति।।

जपन्ति मीमांसकास्त्वां च
विपुलकर्मणो विभव इति
लपन्ति नयानुकलास्सततं
कृपालुकर्ता केवलमिति च ।।ब्रुवन्ति।।

भणन्ति वेङ्कटपते मुनयो
ह्यणिमादिप्रदमतुलमिति
गुणवन्तं निर्गुणं पुनरिति
गृणन्ति सर्वे केवलमिति च ।।ब्रुवन्ति।।

(अन्नमाचार्यसङ्कीर्तनम्)



# अमूल्या मातृमूर्तिः

सं
पा
द
की
य
म्

अवन्यां केभ्योऽपीतरदेशेभ्यः राज्येभ्यः अपि स्त्रीणां समुन्नतस्थानं कल्पयत्यस्माकं भारतदेशः। 'भारतमाता' इति जन्मदात्र्यै भूदेव्यै नमःसमर्पणसंस्कारः प्रायः अस्माकं देशे एव वर्तते। या कापि अपिरिचिता नारी पुरस्तात् आगच्छति चेत्, तया सह भाषणं कर्तव्यं चेत् अम्बे! इति सम्बोधयन्ति यत्रैकत्र स एवास्माकं भारतदेशः। स च संस्कारः अत्रस्थबालस्यापि वर्तते।

तादृशसंस्कारः ज्ञान-विज्ञान-धर्म-दर्शन-सदाचार-संस्कृति-नैतिक-सामाजिक-राजनैतिकप्रभृतीनां जीवनोपयोगिविषयाणां सन्निवेशः यत्र, आर्याणां सभ्यता संस्कृतिः च यानाधारीकृत्य वर्तते, सर्वदर्शनानां मूलत्वेन ये परिगाण्यन्ते तेभ्यः वेदेभ्यः एव आगतः।

ते च वेदाः अपौरुषेयाः काभिश्चित् ऋषिकाभिः दृष्टैः भागैः शोभन्ते इति तत्रापि स्त्रीणां महत्त्वं दृश्यते। वेदे बहुत्र स्त्रीणां प्रसक्तिरस्ति, यथा श्रीसूक्ते महालक्ष्म्याः, भूसूक्ते भूदेव्याः, नीलासूक्ते नीलादेव्याः इत्यादिरूपेण। तथैव यत्र नारायणस्य स्तुतिः तत्र लक्ष्मीदेव्याः, ब्रह्मणः स्तुतौ सरस्वत्याः, शिवस्य स्तोत्रे पर्वातीदेव्याः इत्येवंरूपेण स्त्रीदेवतानां समावेशः दृश्यते।

यजुर्वेदे शिक्षावल्यां तैतिरीयोपनिषदि वटोः उपदेशसन्दर्भे मातृदेवो भव, पितृदेवो भव, आचार्यदेवो भव..... इत्यादिभागः श्रूयते। तत्र सर्वस्मात् प्रथमं माता देवसमा वन्दनीया इति बोधयति उपनिषत्। एवमेव मैत्रेयी, गार्गीत्यादिमातृमूर्तिस्तुतयः अपि निस्संशयं सूचयन्ति मातृरूपा स्त्री वन्दनीया एवेति।

किञ्च पुराणेष्वपि स्त्रीणां महत्त्वं नयनगोचरमेव। यथा श्रीरामस्य चरित्रवर्णनपरे रामायणे रावणेन नीतायाः सीतायाः अशोकवनिकानिवासादितपसः वर्णनश्रवणात् परं सर्वेऽपि मुक्तकण्ठेन वदन्ति यत्, सातायाश्चरितं महत् इति। तादृशमहासाध्वी सीता सर्वपूज्या खलु! अनुकम्प-करुणादयः श्रीरामापेक्षया जानक्याम् एव तीव्राः इति वदति 'पराशर भट्टः'। अग्निप्रवेशसमये अग्निरपि सर्वभक्षकः तां स्प्रष्टुं नाशक्नोत्। सीतायाः पावित्र्यात् पुरतः अग्नेः पावित्र्यं अल्पमिति भावेन आर्यैरेवं वर्णितं स्यात्।

कुरुपाण्डवकथानके विजयाख्ये श्रीमन्महाभारतग्रन्थे प्रधानपात्रभूता अस्ति द्रौपदीति जानीमः। श्रीकृष्णे तस्याः भक्तिः ईदृशीति को वा अनुवर्णयेत्? वस्त्रापहरणसन्दर्भे वासुदेवेन तस्यै स्यन्दिताक्षयाम्बरमेव खलु तत्र प्रमाणम्। तस्याः प्रतिज्ञया एव धर्मस्य विजयः सञ्जातः इत्यपि श्रूयते।

अनसूया ब्रह्म-विष्णु-महेश्वरान् स्वीयपावित्र्यबलात् बालवत्प्राप्य तेभ्यः भोजनं दत्तवती, नलयणी सूर्यस्य स्वाभाविकं उदयं प्रतिबध्नातीत्यादिरूपेण स्त्रीणां महत्त्वं बहुधा श्रूयते। ब्राह्मणाः आशीर्वादमपि 'अरुन्धतीवशिष्ठादिवत् चिरं सुखेन भूयासुः' इत्यादिरूपेण यच्छन्ति, स्त्रीयुताः समृद्धाः भवन्तीति हेतोः। पूर्वजाः अपि वदान्ति खलु 'स्वप्ने स्त्रियं पश्यन्ति चेत् समृद्धिं यान्ति' इत्यादिकम्।

पूर्वं तु विकारविजृम्भितप्रपञ्चे स्त्रीः रक्षितुं पुरुषाः संरक्षणादिसरलकार्येषु ताः नियोज्य बाह्यं कष्टं स्वयमनुभूय कुटुम्बपालने मिथः सहकारं कुर्वन्तः सुखेन अजीवन् इति ज्येष्ठानां वचनम्। अतः अधुनापि नारीणां सहयोगेनैवास्माकं जीवनं चलतीति सत्यं मनसि निधाय तासां महतीनां रक्षणे तोषणे देशरक्षणे च कृतसङ्कल्पाः भवेम।
'जननी जन्मभूमिश्च स्वर्गादपि गरीयसी' इति स्वयं श्रीरामः उक्तवान्; स्वर्गसुखात् यागजन्यादपि जनन्या उपलक्षणया सन्तुष्टया स्त्रीशक्त्या, जन्मभूम्या च सहवासः उत्तमोत्तमः इति।

यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवताः

वेङ्कटाद्रिसमं स्थानं
ब्रह्माण्डे नास्ति किञ्चन ।
वेङ्कटेशसमो देवो
न भूतो न भविष्यति ॥

सम्पुटिः-०८ सञ्चिका-१२

# मार्च् २०२२

श्री प्लवनामसंवत्सरस्य माघकृष्णचतुर्दशीतः
फाल्गुणकृष्णचतुर्दशीपर्यन्तम् - १९४३



मुखचित्रम् – नागलापुरम् श्रीवेदनारायणस्वामी
अन्तिमरक्षापुटः – तरिगोण्ड श्रीलक्ष्मीनरसिंहस्वामी



# सप्तगिरिः


गौरवसम्पादकः-
डा.के.एस्.जवहर् रेड्डि I.A.S.,
कार्यनिर्वहणाधिकारी, ति.ति.देवस्थानानि

प्रकाशकः - प्रधानसम्पादकः
डा॥ के.राधारमणः, M.A., M.Phil., Ph.D.,

सम्पादकः - डा॥ वि.जि.चोक्कलिङ्गम्, M.A., Ph.D.,

मुद्रापकः - श्री पि.रामराजु, M.A.,
प्रत्येकाधिकारी,
ति.ति.दे.मुद्रणालयः,
तिरुपतिः।

छायाचित्रग्रहणम् - श्री पि.एन्.शेखरः, छायाचित्रग्राहकः, ति.ति.दे.
श्री बि.वेङ्कटरमणः, सहायक-छायाचित्रग्राहकः, ति.ति.दे.


**सूचना**

मुद्रितलेखानां विचाराः लेखकानामेव।
एतद्विषये अस्माकं दायित्वं नास्ति।
— *प्रधानसम्पादकः*

## सङ्केतः


प्रधानसम्पादकः,
सप्तगिरिः, ति.ति.देवस्थानानि
तिरुपतिः - ५१७ ५०७.
दूरभाषा - ०८७७ - २२६४५४३, २२६४३५९, २२६४३६०
सूचनानाम्, आक्षेपाणां च कृते सम्पर्कं कुर्वन्तु -
sapthagiri.helpdesk@tirumala.org


एका पत्रिका : रू.५/-
वार्षिकग्राहकत्वम् रू.६०/-




- श्री वि.प्रदीपकुमारः
चरवाणी - ९४९१६४६५३२

**शम्भुरीशः पशुपतिः शिवः शूली महेश्वरः।**
**ईश्वरः शर्व ईशानः शङ्करश्चन्द्रशेखरः॥**

इति अमरकोशोक्तरीत्या परमशिवस्य विविधनामानि अर्थपूर्णानि सन्ति। तथापि तत्रान्तर्निहितस्य 'शङ्करः' इति पदस्य महत्वं बहुविस्तृतं वर्तते।

'शं = मङ्गलं, कृ = करोति' इत्यर्थे कृ धातोः अच् प्रत्यये शङ्करः इति रूपम्। सर्वेभ्यः यः शं मङ्गलं करोति सः शङ्करः इत्यर्थः। एतादृशं शङ्करत्वं विष्णवादिषु सर्वेषु देवेषु अस्ति चेदपि 'शिवे' एव तत् शीघ्रं स्फुरति। यतः रावण, भस्मासुरादिभ्यः अपि याचितं वरं दत्वा तेभ्यः मङ्गलं व्यतनोदिति जानीम एव। अत एव 'भोलाशङ्करः' (लोकभाषासु) इति प्रथितः श्रीमान् रुद्रदेवः।

## गङ्गाधारणम्

पूर्वं सगरमहाराजः अश्वमेधयज्ञं कृतवान्। तस्य षष्ठिसहस्रं पुत्राः आसन्। तान् केनापि बद्धं यागीयम् अश्वं प्रतिप्राप्तुं प्रेषयति। ते इन्द्रेण बद्धम् अश्वं कपिलर्षेः आश्रमे दृष्ट्वा महर्षिरेव चोर इति मत्वा तम् अबाधन्त। तेन क्रुद्धः सः स्वदृष्ट्या एव तान् भस्मसादकरोत्। तेषाम् अन्तिमसंस्कारश्च न कृतः। अतः ते स्वर्गं न आप्नुवन्। सगरवंश्यः राजा 'भगीरथः' स्वपूर्वजानां शान्तये मुक्तये गङ्गाजलम् ऐच्छत्। सः तीव्रतपसा गङ्गां भूलोकं प्रति आनीतवान्। परन्तु गङ्गायाः घोषेण तीव्रेण भूमिः विच्छिन्ना भवतीति महाशिवः तां गङ्गां स्वजटासु धृत्वा, तदनु प्रार्थितः सन् एकमात्रधारां भूमिं सम्प्रेष्य सगरवंश्यान् उद्धरति अपि।

अतः भूमिं परिरक्ष्य तत्र वसद्भ्यः सगरपुत्रेभ्यश्च 'मङ्गलम्' अकरोत् सः शिवः गङ्गाधरः।

## हालाहलाहरणम्

देवदानवैः अमृतप्राप्त्यै क्षीरसागरमथनवेलायां प्रथमं बहिरागतं हालाहलरूपं महाविषं पीत्वा तस्य घातेन स्वीयकण्ठे नीले जाते सत्यपि लोकरक्षणाय, तत् सोढ्वा सर्वान् परिरक्ष्य 'शं करः' अभवत् अयं नीलकण्ठः।

## मार्कण्डेयरक्षणम्

अत्यल्पे वयस्येव मार्कण्डेयस्य मृतिर्भवतीति ज्ञात्वा अपि 'दीर्घायुष्मान् भव' इति वरं दत्तवन्तं वशिष्ठं महर्षिणं मनसि निधाय, तस्य प्रार्थनानुगुणं तद्वचः सत्यं कर्तुं, मार्कण्डेस्य पूजादिकैङ्कर्येण तृप्तः सन् दीर्घायुः, तस्मै दत्वा मार्कण्डेयस्य, वशिष्ठस्य च 'शं' कृतवानयं परमशिवः।

एतादृशमहामहिमः शङ्करः अष्टमूर्तिस्वरूपेण अस्मद्देशे भारते विविधप्रदेशेषु विराजते।

**भवश्शर्वो रुद्रः पशुपतिरथोग्रः सह महान्।**
**तथा भीमेशानाविति यदाभिधानाष्टकमिदम्।।** इति दिशा

१. भवः, २. शर्वः ३. रुद्रः ४. पशुपतिः ५. उग्रः ६. महादेवः ७. भीमः ८. ईशानः इति तस्याष्टमूर्त्तयः।



**१.भवः -** भवमूर्तेः प्रतीकमस्ति जलतत्त्वम्। 'तिरुवण्णै' प्रदेशे (तमिळनाडुराज्ये) स्थितः 'जम्बुकेश्वरः' अस्ति जलतत्त्वप्रधानः। अत्रत्यः ईश्वरः जललिङ्गत्वेन निर्दिश्यते। अस्य आलयः 'तिरुच्चि' नगरात् अनतिदूरे विद्यते। तत्रस्थ 'जम्बुवृक्षेण सहैव अहं निवासं करिष्यामि' इति शिवः अवदत् इति स्थलपुराणात् ज्ञायते। एतं जम्बुवृक्षमपि ईश्वरमिव भक्त्या पूजयन्ति जनाः। अस्य जम्बुवृक्षस्य कारणतः अत्रत्यः जम्बुकेश्वर इति ख्यातिमवाप। अत्र देवालयस्य गर्भगृहे पाणिपीठस्य पार्श्वे जलबुद्बुदाः उत्पद्यन्ते। एते एव अस्य जललिङ्गत्वं प्रमाणयन्ति।





**२.शर्वः** - शर्वमूर्तेः प्रतीकमस्ति भूतत्त्वम्। एतत्तत्त्वप्रधान मन्दिरं तु 'काञ्चीपुरे' (तमिळनाडुराज्ये) विलसति। अत्रत्यः लिङ्गः 'भूलिङ्गः' 'क्षितिलिङ्गः' वा उच्यते। पूर्वं कश्चन आम्रवृक्षः आसीत्, यश्च वर्षे एकमेव फलं ददाति स्म। तत्फलेन पार्वती इमं लिङ्गम् अर्चितवती इति कथा श्रूयते। अत्र विशेषः नाम अयं लिङ्गः अभिषिच्यते मल्लिकातैलेन, न तु जलेन। पार्वती अत्र कामाक्षी नाम्ना निर्दिश्यते। भक्त्या पूजिता सा भक्तान् स्वकटाक्षपातनेन अनुगृह्णातीति प्रजानां विश्वासः।



**३.रुद्रः** - रुद्रमूर्तेः प्रतीकमस्ति अग्निः। 'तिरुवण्णामलै' क्षेत्रे (तमिळनाडुराज्ये) 'अरुणाचलेश्वर'नाम्ना विख्यातः अस्ति तेजोलिङ्गः। अत्रत्यः गिरिः एव लिङ्गत्वेन गण्यते। पार्वत्याः महतः तपसः हेतोः उत्पन्नः अग्निस्फुलिङ्ग एव अरुणलिङ्गत्वम् आप इति कथा श्रूयते।



**४.पशुपतिः** - पशुपतिः यजमानत्वेन परिगण्यते। पशुः स्थावरजङ्गमादिः। पशूनां स्वामित्वात् अयं पशुपतिः। इतरत्र प्रायः शिवः लिङ्गरूपः। किन्तु नेपाले विद्यमानः अयं शरीरी। कटिपर्यन्तो भागः अत्र दृश्यते। अस्य चत्वारि मुखानि। सुवर्णकवचैः आवृतान्येव मुखानि भक्तैः दृश्यन्ते। अत्रत्यं गर्भगृहं प्रवेष्टुं कस्यापि नास्ति अधिकारः विना अर्चकैः। नेपालधिपतिः राजा अपि गर्भगृहप्रवेशे न अर्हः। जगति ख्यातस्यास्य दर्शनाय विभिन्नप्रदेशेभ्यः भक्ताः प्रवहन्ति।



**५.उग्रः** - उग्रमूर्तेः प्रतीकमस्ति वायुतत्त्वम्। 'वायुलिङ्गः' तु श्रीकालहस्तिक्षेत्रे (आन्ध्रप्रदेशे) वर्तते। कश्चन ऊर्णनाभः (श्रीः) कृष्णसर्पः (कालः) गजः (हस्ती) च अत्रत्यं लिङ्गं पूजितवन्तः इत्यतः एतत् क्षेत्रं 'श्रीकालहस्ति' इति ख्यातमिति स्थलपुराणम्। 'कण्णप्प' नामकेन व्याधेन सम्बद्धा घटना अत्रैव प्रवृत्तेति श्रूयते। अध्यात्मक्षेत्रे उन्नतिं प्राप्ताः श्रेष्ठात्मानः अत्रत्यं लिङ्गं परितः वायोः सञ्चारमवगन्तुं शक्नुवन्तीति जनानां वचः। अयमालयः स्वर्णमुखीनद्याः तीरे विलसति।





**६.महादेवः** - महादेवमूर्तेः प्रतीकमस्ति चन्द्रतत्त्वम्। चन्द्रतत्त्वप्रधानं चन्द्रलिङ्गं पश्चिमवङ्गराज्ये 'चतगांव'नगरात् अनतिदूरे वर्तते। एतत्क्षेत्रं परितः बहूनि तीर्थक्षेत्राणि सन्ति। अस्य क्षेत्रस्य माहात्म्यं देवीपुराणे विशेषतः परिलसति।





**७.भीमः** -भीममूर्तेः प्रतीकमस्ति आकाशतत्त्वम्। एतत्सम्बद्धः आकाशलिङ्गः चिदम्बरे (तमिळनाडुराज्ये) कावेरीनद्याः तटे वर्तते। अत्र गर्भगृहे वयं मूर्तिं लिङ्गं वा न पश्यामः। अपि तु आभरणपुष्पादिभिः अलङ्कृतं किञ्चन स्थलं पश्यामः। तत्रैव देवस्य सत्ता अभ्यूह्यते। आध्यात्मिकतया उन्नताः अत्र शिवं साक्षात्कर्तुं प्रभवन्ति इति श्रूयते। गर्भगृहात् बहिः चित्ताकर्षकत्वेन नटराजमूर्तिः भासते। भक्ताः तामेव मूर्तिं भक्त्या सम्पूज्य तृप्तिमनुभवन्ति।





**८.ईशानः** - ईशानमूर्तेः प्रतीकमस्ति सूर्यतत्त्वम्। एतत्सम्बद्धः सूर्यलिङ्गः **कोणार्क देशे उत्कले** (ओडिशाराज्ये) वर्तते। तच्च जगन्नाथपुरीसमीपे अस्ति। कालस्य आघातकारणतः अत्रत्यं मन्दिरं जीर्णतां प्राप्नोत्। अतः वयम् अद्यत्वे तत्र कांश्चन शिथिलान् भागानेव द्रष्टुं शक्नुमः, न तु समग्रमालयम्। देवमूर्त्यादिकमपि तत्र नास्ति। पूर्वं साम्बः नाम राजा कुष्ठरोगग्रस्तः सन् सूर्यलिङ्गं भक्त्या अभ्यर्च्य रागात् मुक्तः अभवदिति कथा पुराणादिषु वर्ण्यते। एतत् ऐतिहासिकं क्षेत्रं द्रष्टुं जनाः प्रवाहरूपेण अद्यापि यान्ति।



तथाच

**जलं वह्निस्तथा यष्टा सूर्याचन्द्रमसौ तथा।**
**आकाशं वायुरवनी मूर्तयोऽष्टौ पिनाकिनः॥**

इत्युक्तदिशा जलादितत्त्वाप्रतीकरूपेण स्थितः शङ्करः अस्माभिः नित्यं, महाशिवरात्र्यादिपर्वसु च क्रियमाण - करिष्यमाणपूजादिकैङ्कर्यैः तृप्तः सन् अनवरतमस्मासु दृष्टिं प्रसार्य, मङ्गलं तनोतु सर्वेभ्यः इति प्रार्थयामः।



# भगवतः श्रीवेंकटेश्वरस्य सेवार्थम् उत्तमप्राशासनिकव्यवस्था

- डा. श्वेतपद्मा शतपथी
चरवाणी - ९०००६०५३५४

परमकारुणिकः पुरुषोत्तमः भगवान् वेंकटेश्वरः सर्वत्र विद्यमान एव। भक्तस्य कामनापूरणार्थं स सर्वोत्तमः कल्पद्रुमः। अतः भगवतः दर्शनार्थं प्रतिदिनं तस्य द्वारं भक्तानां कृते उन्मुक्तमेव। अहर्निशं श्रीवेंकटेशस्य मन्दिरे सहस्राधिकानां भक्तानां समागमः दृश्यते। अतः श्रीवेंकटेश्वरस्य माहात्म्यमनुसृत्य प्रार्थना क्रियते यथा-

**वेङ्कटाद्रिसमं स्थानं**
**ब्रह्माण्डे नास्ति किञ्चन।**
**वेङ्कटेशसमो देवो**
**न भूतो न भविष्यति।।** इति।

एतेषां सर्वेषां भारतवर्षस्य तथा विश्वस्य विभिन्नेभ्यः स्थानेभ्यः समागतानां भक्तानां कृते भगवतः सहज-शृङ्खलित-दर्शनार्थं ति.ति.दे. - प्रशासनपक्षतः या व्यवस्था सम्पादिता; सा सर्वोत्तमा इति वक्तुं शक्यते।

तिरुपतिं परितः सप्ताचलाः विराजमानाः। तत्र शेषाचलपर्वतस्य शीर्षभागे अवस्थापिता इयं भगवतः वेंकटेश्वरस्य पुण्यभूमिः। देवस्य









श्रीवेंकटेश्वरस्य सुचारुतया सेवार्थं सर्वदा नियुक्तमस्ति तिरुमल-तिरुपति-देवस्थानम् इति विश्वप्रसिद्धं प्रतिष्ठानम्।

नित्यनैमित्तिकरूपेण पूजा-समयानुवर्त्तिता-सुरक्षा-आवासव्यवस्था प्रभृतीनि प्रशासनस्य कार्याणि सर्वदा प्रशंसितानि भवन्ति। ति.ति.दे. पक्षतः मन्दिरस्य तथा आध्यात्मिकतायाः विकासार्थं तथा प्रचारार्थं यानि यानि कार्याणि क्रियन्ते तेषां सर्वश्रेष्ठानां कार्याणामेकः संक्षिप्तपरिचयः अत्र दीयते; यस्मात् प्रतिष्ठानस्य प्रशासनिकं कौशलं प्रतिपादितं भवति।

१. परिवेशस्य सुरक्षा - भगवान् तत्र परिवेशे निवसति; यत्र स्वच्छता भवति। अतः तिरुमलक्षेत्रं तथा तिरुपतिक्षेत्रमपि सर्वदा स्वच्छं, सुन्दरं, निर्मलं भवति। तत् ति.ति.दे. प्रतिष्ठानस्य अतीव अभिनन्दनीयं कार्यम्।

२. आर्जितसेवा - सर्वे भक्ताः Online ticket booking कृत्वा भगवतः





सहजं दर्शनं प्राप्तुं समर्थाः भवन्ति।
३. कल्याणवेदिका - इयमपि एका महत्त्वपूर्णा सेवा भक्तानां कल्याणार्थमुद्दिष्टा।
४. प्रवासिभारतीयानां कृते स्वतन्त्रव्यवस्था।
५. पद्मनाभनिलयमाध्यमेन भक्तानां सेवा सततमेव क्रियते।
६. ऐतिह्यरक्षार्थं सर्वविधा व्यवस्था ति.ति.दे. द्वारा सर्वदा क्रियते। परम्परासंरक्षणमेव प्रशासनस्य प्राथमिकं कर्त्तव्यमिति ते आमनन्ति।
७. विद्यादानव्यवस्था श्रीवेंकटेश्वरप्रशासनपक्षतः प्रायशः पञ्चत्रिंशत् शिक्षानुष्ठानानि साक्षात् सञ्चाल्यन्ते। पुनश्च शताधिकानां शिक्षानुष्ठानानां विद्यार्थिनाम् अध्ययनार्थं आर्थिकमनुदानमपि प्रदीयते।
८. श्रीवेंकटेश्वरभक्ति चानेल् - एतद्द्वारा श्रीवेंकटेशभगवतः परम्परायाः संस्कृतेः दर्शनस्य च प्रचारमाध्यमेन समाजे आध्यात्मिकतायाः जागरणं भवति।

एतदतिरिच्य भक्तानामानन्दवर्धनार्थं विविधसेवापूजासम्पादनार्थमवसरः प्रदीयते।
ताः सेवापूजाः भवन्ति - यथा -
१. सुप्रभातगानम् २. तोमाल सेवा, ३. अर्चना, ४. कल्याणोत्सवः ५. दोलोत्सवः ६. आर्जितब्रह्मोत्सवः ७. वसन्तोत्सवः ८. सहस्रदीपालंकारसेवा।
एताः पूजाः अतिरिच्य अन्ये ये ये उत्सवाः परिपाल्यन्ते ते भवन्ति - १. विशेषपूजा, २. अष्टदलपादपद्माराधना, ३. सहस्रकलशाभिषेकः, ४. तिरुप्पावडसेवा, ५. मेल्च्छाट्वस्त्रम् ६. पूराभिषेकः ७. निजपाददर्शनम् इत्यादयः।

एवंरूपेण प्रभोः श्रीवेङ्कटेश्वरस्य वैभवेन, असीमकरुणया च सर्वेषां जीवनं सुखमयं परिपूर्णतामाप्नोति यथा तथा सर्वेषां भक्तजनानाम् अनुकूलाय इतोऽप्यनेकाः सेवाः आनेष्यन्ते समर्थप्रशासनव्यवसायिभिः इति चिन्तयामि।

तथाच यथोचितं भगवत्पूजाकैङ्कर्यं कृत्वा तदर्थं विविधमार्गैः सहायकतां वहन्ति ये, तेभ्यः अभिनन्दनानि अर्पयामः।



**SAPTHAGIRI**

## STATEMENT ABOUT OWNERSHIP AND OTHER PARTICULARS ABOUT

**(MONTHLY)**
**FORM IV**
*See Rule 8*

| | | |
|---|---|---|
| 1. Place of Publication | : | TIRUPATI |
| 2. Periodicity of its Publication | : | Monthly |
| 3. Printer's Name | : | Sri P. Ramaraju, M.A. |
| Whether citizen of India | : | Yes |
| Address | : | S.O.,T.T.D.Press Compound, K.T.Road, Tirupati. |
| 4. Publisher's Name | : | Dr. K. Radha Ramana, M.A.,M.Phil., Ph.D. |
| Whether citizen of India | : | Yes |
| Address | : | Chief Editor Office, T.T.D.Press Compound ,K.T.Road, Tirupati. |
| 5. Editor's Name | : | Dr. V.G.Chokkalingam, M.A., Ph.D. |
| Whether citizen of India | : | Yes |
| Address | : | Chief Editor Office, T.T.D.Press Compound ,K.T.Road, Tirupati. |
| 6. Name and address of individuals who own the News paper and partners or share holders holding more than one percent of the Total Capital | } | Tirumala Tirupati Devasthanams |

*I, K. Radha Ramana, hereby declare that the particulars given above are true to the best of my knowledge and belief.*

TIRUPATI
Date : 28-2-2022

**(Sd.) Dr. K. Radha Ramana**
*Signature of the Publisher*

# हरिदासवाङ्मये
# श्रीवेङ्कटाचलाधीशः
(विजयदासकृतिषु)

तेलुगुमूलम् - सुस्वरं नागराजाचार्युलु
संस्कृतानुवादः - डा.गङ्गिशेट्टि लक्ष्मीनारायणः
चरवाणी - ९४९४२४८३४८



(तदनन्तरम्)

तिरुमलक्षेत्रसन्दर्शनम् तिरुमलेशस्य दर्शनं च सकलदेवतादिपापपरिहारं कृत्वा परिशुद्धिं करोतीनि वदति-

शिवन ब्रह्महत्य चंद्रन गुरुतल्प।
कलिय सुरापान बलिय स्वर्णस्तेय
दिविजपतिय परयुवति गमन दोष।
अवरवर्या किन्नु बलभद्रनपा -
पवनु परिहार जमनु मोदलाद।
देवतेगळ पापनिवह विदु पोयितीगिरियल्लि
भवगिरिगे वज्राविजय विठल बार दवगे दयमाडानेदिगू

शिवस्य ब्रह्महत्या, चन्द्रस्य गुरुतल्पः, शुक्रस्य सुरापानम्, बलिचक्रवर्तिनः सुवर्णापहारः, इन्द्रस्य परस्त्रीगमनम्, बलभद्रस्य किल्बिषम्, इत्यादि देवतानां पापसमूहः तिरुमलगिरेः सन्दर्शनेन दूरीकृतः। ये तावत् तिरुमलगिरिं प्रति न आगच्छन्ति तान् विजयविठलः न अनुगृह्णाति।

तिरुमलपर्वतस्य सौन्दर्यं वर्णयन् -

सप्तपेडॆ गळु तप्तकांचनदंते।
सप्तवन निधि सप्तद्वीपदमध्या।
सप्तेरडुलोक व्याप्ति वागिकिरण। सप्ताश्वन तेरदि
दीप्तवागिदे सर्वतृप्त मेलुगिरि विजयविठलनिगे
आप्तनागलु क्लप्राप्ति यायितु बिडदे।।

सप्तशृङ्गतप्तकाञ्चनमिव सप्तपर्वत-सप्तद्वीप- चतुर्दशभुवन परिव्याप्तस्य सप्ताश्वस्य सूर्यस्य किरणानामिव तिरुमलपर्वतः चकास्ति इत्येवं प्रकारेण दासवर्याः अकथयन्।

गिरिय श्रृंगारव विवरिसुवरारिन्नु।
मिरुगुतिदे पुरा एरेदबण्णदचामी
करदंते सुत्तलु चरिसुव मृगजल।
परिपूर्णगुणांबुधि विजयविट्ठल तिम्मा।
निरुत वैभवदिंद हिरिदागि नलिवा।।

अस्य वेङ्कटाचलस्य अलङ्कारवैभवं वर्णितुं न शक्यते। पर्वतोऽयं सन्तप्तसुवर्णम् इव भाति। स्वर्णशिखराणि बहुब्रह्ममयानि वर्तन्ते।

एतस्य वेङ्कटाद्रेः परितः संचरमाणाः जन्तवः जलचराः पक्षिणश्च इत्येतेषां समूहानां एकैकस्य विशिष्टं सौन्दर्यं वर्तते। तत्र तत्र गुहाः, पुष्करणी, सुन्दराः पर्वतशृङ्गाः वर्तन्ते। एतेषां मध्ये देवता-गरुड-गन्धर्व-किन्नर-सिद्ध-साध्य-किम्पुरुषाः यक्षविद्याधरमनुमुनिभूसरादयः अनेके सञ्चरन्ति। अस्मिन्नेव वेङ्कटाचले अनेके सर्वसङ्गपरित्यागिनः संयमिप्रवराः वेङ्कटाद्रिनाथं श्रीनिवासं सर्वस्वमिति सम्भाव्य विद्योतन्ते।

आदिवराहक्षेत्रनाम्ना व्यवह्रियमाणे वेङ्कटाचले भगवतः श्रीनिवासस्य उत्तरभागे पूर्वाभिमुखे पुष्करण्यां वराहस्वामी धरादेव्या सह विराजते। विजयदासवर्याः भगवन्तं वराहस्वामिनं पञ्चचरणेषु वर्णतवन्तः।

कमल संभवनासिकासंभवकायो नामसुवे निनगेनानु।।

........................

कनकलोचन भूमियनु कद्दु ओय्यलु
अनिमिषरोलिसे आवन कोंदुद्धरिसिदे।।

ब्रह्मणः नासिकातः वराहस्वामी प्रादुर्भूतः। पूर्वं यदा हिरण्याक्षः भूमिं गृहीतवान् तदा देवतानां प्रार्थनाम् उररीकृत्य भगवान् वराहस्वामी हिरण्याक्षं हत्वा भूदेवीं रक्षितवान्। विजयदासवर्याः 'दयविरलि दयविरलि धरणिधरने' इति चरणत्रययुक्तेन कीर्तनेन वरहस्वामिनं स्तुतवन्तः।

(अनुवर्तिष्यते)



# तिरुमलक्षेत्रे श्रीमलयप्पस्वामिनः प्लवोत्सवः

दि.१३.०३.२०२२ तः १७.०३.२०२२ पर्यन्तम्



दि.१३.०१.२०२२ **वैकुण्ठ एकादशी** सन्दर्भे तिरुमल श्रीस्वामिनः आलयः बहुरङ्गरञ्जकपुष्पालङ्करणेन सुशोभितः।

श्रीभूसमेतः श्रीमलयप्पस्वामी चतसृषु तिरुमलमाडवीथिषु स्वर्णरथोत्सवे शोभायमानः भक्तजनान् अनुजग्राह।



# तिरुमलतिरुपतिदेवस्थानानि



२७.०१.२०२२ दिनाङ्के तिरुपतिस्थ डी.पी.डबल्यु स्टोर् मध्ये
**नमामि गोविन्द** इति नाम्ना पञ्चगव्यीयपदार्थनिर्माण-विक्रयकेन्द्रस्य
शुभप्रारम्भोत्सवं ति.ति.दे. पालकमण्डल्यध्यक्षाः श्री वै.वी.सुब्बारेड्डि,
ति.ति.दे. कार्यनिर्वहणाधिकारिणः डा॥ के.यस्.जवहर् रेड्डि ऐ.ए.एस्.,
ति.ति.दे. अतिरिक्तकार्यनिर्वहणाधिकारिणः श्री ए.वी.धर्मारेड्डि ऐ.डि.ई.यस्.,
तिरुपति केन्द्रसचिवः डा॥गुरुमूर्तिः, तिरुपति शासनसभ्यः
श्री भूमन करुणाकर् रेड्डि तदितरोन्नताधिकारिणश्च संयुक्ततया चक्रुः।
तथा तत्र विद्यमानविभागवीक्षणे निमग्नानाम् अधिकारिणां दृश्यानि।















# तिरुमलतिरुपतिदेवस्थानानि



०५.०१.२०२२ दिनाङ्के तिरुपतिस्थ श्रीवेङ्कटेश्वर सङ्गीतनृत्यकलाशालासन्दर्शने कञ्चि कामकोटिपीठाधीशाः श्री श्री श्री विजयेन्द्र सरस्वती महास्वामिनः। तत्र च ति.ति.दे, (तिरुपति) संयुक्तकार्यनिर्वहणाधिकारिणी श्रीमती सदा भार्गवी ऐ.ए.एस्., तदिरोन्नताधिकारिणश्च।



२०२२ जनवरी २१ तः २७ पर्यन्तं तिरुचानूरु श्रीपद्मावतीदेव्याः आलये अत्यन्तवैभवेन नवकुण्डात्मकश्रीयागः सुसम्पन्नः। तस्य यागस्य महापूर्णाहुतिदृश्यम्।





दि.२६.०१.२०२२ गणतन्त्रदिनोत्सवे ति.ति.दे. प्राशासनिकभवनस्य प्राङ्गणे त्रिवर्णपताकस्य उड्डयनसन्दर्भे प्रवाचकाः ति.ति.दे. कार्यनिर्वहणाधिकारिणः डा।। के.एस्.जवहर् रेड्डि ऐ.ए.एस्., महाभागाः।



२६.०१.२०२२ दिनाङ्के ७३ तमगणतन्त्रदिनोत्सवं पुरस्कृत्य अचरितत्रिवर्णपताकोड्डयनादिसमारम्भे पताकोन्नायकाः तथा प्रभाषकाः ति.ति.दे. कार्यनिर्वहणधिकारिणः डा।। के.एस्.जवहर् रेड्डि, ऐ.ए.एस्., तथा ति.ति.दे. तिरुपति संयुक्तकार्यनिर्वहणाधिकारिणः श्री वीरब्रह्मम् ऐ.ए.एस्., ति.ति.दे. मुख्यसुराक्षाधिकारिणः श्री गोपीनाथ जेट्टि तथा इतरोन्नताधिकारिणश्च भागग्राहिणः अभवन्।

भागः -११

# भगवद्गीता

तेलुगुमूलम् - श्री कुप्पा विश्वनाथशास्त्री
संस्कृतानुवादः - बि.गिरीशकुमारः
चरवाणी - ९९८९६५७५७६



(तदनन्तरम्)

वस्तुतः भीमस्य नाम वक्तव्यम्। किन्तु सात्यकेः नाम ग्रहणात् सात्यकि- दुर्योधनयोः मध्ये भेदः प्रदर्श्यते। तथा च युद्धात् प्राक् अर्जुन-दुर्योधनौ उभावपि कृष्णं प्रति गतवन्तौ। तं कृष्णं सहायार्थं पृष्टवन्तौ च। तदा अर्जुनः परमात्मानं श्रीकृष्णं स्वपक्षाय जग्राह। दुर्योधनस्तु सम्पूर्णं यादवसैन्यं जग्राह। किन्तु तेषु (यादवेषु) सात्यकिः एक एव तामाज्ञां तिरस्कृत्य धर्मपक्षे एव कृष्णेन त्वया सहैव तव पक्षे युद्धं करोमि इत्युक्तवान्। किमस्यैकस्यैव धर्मे रतिर्वा? किमनेनैकेनैव?

द्वितीयं ''विराटश्च'' इति उक्तवान्। विराटस्तु सुप्रसिद्धः राजा। स च विराटः साधारणवीरः दुर्योधनाय बहु अपकारं कृतवान्। पाण्डवानाम् अज्ञातवाससमये तेभ्यः आश्रयं दत्तवान्। ते अन्यत्र वासं चक्रुः चेत् अतिसुलभतया अहं जानामि स्म। परन्तु तादृशं सुवर्णावकाशं एषः जहार। यदि अहम् अज्ञातवासं भग्नं कृतवान्, तर्हि ते इतोऽपि त्रयोदशवर्षाणि वनवासार्थं गच्छन्ति स्म। युद्धस्य प्रसक्तिरेव न भवति स्म। तथा च युद्धस्य कारणीभूतः विराट एव।

तृतीयं नाम 'द्रुपदः' इति अस्ति। द्रुपदस्य मनसि द्रोणविषये विमुखता शत्रुता अस्ति। किन्तु द्रोणस्य मनसि द्रुपदविषये तादृशी चिन्ता नास्ति। तथापि द्रुपदः ''मम पुत्रेण द्रोणस्य शिरच्छेदनं भवेत्। तन्मया द्रष्टव्यम्'' इति धिया आगतवान्। अयं विषयः सर्वेषां दृष्टिगोचरः एव। तज्ज्ञापयन्नेव सः दुर्योधनः 'द्रुपदः द्रुपदः इति, एवं मध्ये त्वां मारितुमेव सः पुत्रमवाप इति। सोऽपि अत्र रणेऽस्ति इति' च प्रदर्शयन् तस्य दुर्बुद्धिं बहिः अगमयत्। एवं परराजान् हीनतया निन्दितवान्।

एवं अन्यानपि वीरान् एवं जगाद -

**धृष्टकेतुश्चेकितानः काशिराजश्च वीर्यवान्।**
**पुरुजित् कुन्तिभोजश्च शैब्यश्च नरपुंगवः।।** इति।

तथा च - धृष्टकेतुः, चेकितानः, काशिराजः, पुरुजित् कुन्तिभोजः इत्यादीनां सर्वेषां पाण्डवानां मातुलवर्गीयाणां नामानि उक्तवान्। अत्र आन्तर्यं किं नाम? धृष्टकेतुः 'चेदि' इति देशस्य राजा। अतः तस्य 'चेद्यः' इति नाम। एवं सः धृष्टकेतुः शिशुपालस्य पुत्रः। शिशुपालस्तु महान् कृष्णविरोधी। सम्पूर्णमपि जीवितं कृष्णनिन्दायामेव आसीत्तस्य। अन्त्ये कृष्णस्य चक्रेण हतः शिशुपालः। तादृशस्य पुत्रः असौ धृष्टकेतुः पितरं न अनुसृतवान्। कृष्णे महाप्रीत्या तस्य पक्षं गतवान्। तस्य सहोदरीं ''शृणुमतीं'' नकुलाय दत्तवान्।

पित्रा यः दोषः आचरितः, स मया आचरणीय इति नास्ति इति धीमतः तस्य नाम प्रत्येकदृष्ट्या उक्तवान्। एवमन्यः 'चेकितानः' इति। असौ तु रणभूमौ एव विनोदार्थी इव भवति। अर्जुनपक्षपाती अपि। एवं काशिराजः अपि। अस्य नामोच्चारणेनैव महापुण्यं प्राप्नुवन्ति। ते सर्वे काशिराजानः काशीराजवंश्याः पुत्रपौत्रप्रपौत्रादयः वीर्यवन्तः एव जनिं प्राप्नुवन्ति। एतादृशवंशाः विरलाः एव।

(अनुवर्तिष्यते)

# कपिलतीर्थम्

श्री जि.सम्पत् कुमारः
चरवाणी - ९९५१५८१७१७



अलिपिरेः पूर्वदिशि कपिलतीर्थमिति जलपातः आपर्वतपातालं प्रवहति। कपिलमुनिना अर्चितस्य शिवस्य सान्निध्यात् कपिलालये **कपिलतीर्थम्** इति नाम जलपालस्य वर्तते। कपिलेश्वरस्वामिनः आलयस्तावत् गुहार्धेन युक्तः अस्ति। अस्यां पर्वतगुहायां दशमे शतमाने चोळानां अधीने विद्यमानस्य कोत्तूरु अग्रहारस्य अधिपतिना मुनियदरयेन निर्मापितः शिवस्य आलयः वर्तते। जलपातस्य प्राचीप्रतीचीदिशोः विजयनगरस्य राजा ''अच्युतरायः'' सन्ध्यावन्दनादिमण्टपान् निर्मापितवान्, एवं जलपातस्य चतसृषु अपि दिक्षु सोपानानि निर्माप्य चक्रमुद्रादिविशिष्टाः शिलाः स्थापितवान् इत्यतः इदं ''चक्रत्ताळवार् तीर्थम्'' इत्यपि नाम्ना व्यवह्रियते।

जलपातस्य पूर्वदिग्भागे पश्चिमाभिमुखः आलयोऽस्ति। आदौ विस्तृतः मणिमण्टपः दृश्यते। तस्य उत्तरदिग्भागे गणपतिविग्रहान्विनः मुखमण्टपः दृश्यते। अस्य मण्टपस्य पूर्वदिग्भागे विद्यमानेन द्वारेण अन्तर्गच्छामश्चत् अन्तराले गर्भालयस्य प्रदक्षिणपन्थाः दृश्यते। अयं च पन्थाः कपिलेश्वरस्वामिनां गर्भालयं एवं तस्य दक्षिणभागे विद्यमानं देव्याः आलयं, पुनः तस्य दक्षिणभागे देव्याः आलयं परितः अस्ति। गर्भालये तावत् नित्यं पूज्यमानाः कपिलेश्वरस्वामिनः विराजन्ते। प्रदक्षिणपथः



अवाचीदिग्भागे एकः बहिर्मण्टपः अस्ति। अत्र च दीर्घवेदिकाया उपरि षडाननस्य एवं काशीविश्वेश्वरस्य लिङ्गं, द्वैमातुर-सूर्यनारायणादीनां निर्जराणां विग्रहाः सन्ति। अस्य गर्भालयस्य प्राङ्गणे तावत् धान्यागारः पाकशाला च वर्तेते। अस्मिन् प्राङ्गणे विद्यमाने लघ्वालये स्मरहरस्य लिङ्गमपि दृश्यते। कपिलतीर्थस्य प्रारम्भभागे विस्तृतं राजगोपुरं शोभते। अनेन मार्गेण अन्तर्गच्छामश्चेत् ताळ्ळपाकैः निर्मितः लक्ष्मीनारायणस्य आलयः अन्तराङ्गणस्य वामभागे, दक्षिणभागे तु राधाकृष्णस्य मन्दिरं, मध्ये तावत् उन्नतस्तम्भैः युक्तः बहिर्मण्टपः शोभते। ततः पुष्करिण्याः प्रवेशपन्थाः दृश्यते, प्रतीचीदिशः वामभागे सन्ध्यावन्दनमण्टपस्य ऊर्ध्वभागे भित्तेः अर्धभागे बहुसुन्दरः प्रह्लादविग्रहः दृश्यते। एवं अत्र नृसिंहस्य विग्रहोऽपि अस्ति, परन्तु कपिलेश्वरस्वामिनां यथा नित्यपूजा भवति तथा न नित्यपूजा प्रचलति नृसिंहविग्रहस्य।

कपिलतीर्थस्य बहिर्भागे अर्थात् कपिलेश्वरस्वामिनां आलयमार्गे हनुमतः आलयः दृश्यते। ततः नम्माळ्वार् आलयः दृश्यते। दशमशतमानीये अस्मिन् आलये दीर्घः एवं पद्मासने विद्यमानः **नम्माळ्वार्** विग्रहः विलसति। शिथिलीभूतस्य अस्यालयस्य विंशतितमे शतमाने जीर्णोद्धारं कृत्वा नित्यपूजायाः व्यवस्था च परिकल्पिता।

कपिलेश्वरस्वामिनां आलये शिवरात्रेः प्राक् पश्चात् च एकादशदिनपर्यन्तं ब्रह्मोत्सवः प्रचलति। अयञ्च ब्रह्मोत्सवः तिरुमल तिरुपति देवस्थाने प्रचाल्यमानब्रह्मोत्सवसदृशः, अर्थात् गरुडादिसकलवाहनसेवाः विजृम्भेण प्रचाल्यन्ते। अत्र डिसम्बर् एवं जनवरि मासयोः क्रियमाणनावोत्सवाः अतीव सुन्दरतया भासन्ते।

# वसन्तोत्सवः

- डा.सोमनाथदाशः
चरवाणी - ८२४७६७८५४८



### भारते वसन्तोत्सवः (होली)

आकुमारीहिमालयं यावद्विस्तृतोऽयमस्माकं देशः भारतं जाति-धर्म-वर्ण-भाषा-भूषादिभिर्यद्यपि भिन्नो भवति तथापि एकसूत्रगतपुष्पमालेवात्यन्तदुर्लभाद्भुतसंस्कृत्या एकतायाः महामन्त्रं प्रयच्छति। अयं नित्योत्सवस्य देश इत्युच्यते। अत्र दिन-सप्ताह-मास-वर्ष-ऋतु-वातावरणानां परिवर्तनेन साकं नैके उत्सवाः तत्तद्धर्मसम्प्रदायसमुदायेन परिपाल्यन्ते स्वस्वसंस्कृतेः सुरक्षा च क्रियते। प्रत्येकमुत्सवस्य प्रभावः धर्म-समाज-राजनीति-संस्कृति-सभ्यतानां विकासस्योपरि अवश्यं पतति। राष्ट्रियैकतायाः समृद्धिः, पारस्परिकप्रेमसम्बन्धः, साम्प्रदायिकैकता, सामाजिकसमन्वयः इत्यादिषु क्षेत्रेषु उत्सवानां पर्वणां वा भूमिका श्लाघनीया भवति। मानवानां सात्त्विकभावस्य विकासेन सह विश्वसनीयता, नैतिकता, विशुद्धता इत्यादयः गुणा अपि उत्सवैस्सम्पाद्यन्ते। अतः युगस्य परिवर्तनेनापि उत्सवानामुपरि कोऽपि प्रभावः नैव पतति। आप्राचीनकालात् इमे उत्सवाः यथा परिपालिता आसन् तथैव इदानीमपि परिपाल्यन्ते। अत्र समायोजिषु उत्सवेषु नागपञ्चमी, रक्षाबन्धनम्, जन्माष्टमी, दुर्गापूजा, दीपावली, ईद्, मुहर्रम, वकरीद, ख्रीष्टमास्, ओणम्, वैशाखी, रथयात्रा, पोंगल्, गणेशचतुर्थी, सरस्वतीपूजा, बुद्धपूर्णिमा, रामनवमी, शिवरात्री इत्यादयः प्रमुखाः प्रसिद्धाश्च उत्सवाः भवन्ति। तत्रापि ''होली'' वा ''वसन्तोत्सवः'' इति पर्व अत्यन्तं हि मनोरञ्जकं, मैत्रीसम्पादकरङ्गानां मिश्रणं भवति, यत्र सप्त रङ्गानि जीवनस्य आनन्दप्रदमुहूर्तानि प्रकाशयन्ति। ''होली''ति नाम्ना प्रसिद्धमिदं पर्व विशिष्टरूपेण भारतीयहिन्दूसमाजेन तथा नेपालवास्तव्यैः, नेपालप्रवासीभिश्च परिपाल्यते। उत्तरभारते अस्य कृते अधिकं महत्त्वं प्रदत्तमस्ति। विविधेषु प्रान्तेषु अस्योत्सवस्य नाम वैविध्येन स्वीक्रियते। यथा - ''फगुआ'', ''धुलेंडी'', ''छारंडी'', ''फल्गुदशमी'', ''वसन्तपञ्चमी'', ''वसन्तमहोत्सवः'' , ''काममहोत्सवः'', ''होलिका'', ''होलाका'', ''होलिकादहनम्'', ''धूलिवन्दनम्'' इत्यादिः। उत्सवोऽयं हिन्दूपञ्चाङ्गाधारेण वसन्तपञ्चमीतिथेः प्रारभ्यते। अनेन सह नैकाः पौराणिकगाथाः सम्पृक्तास्सन्ति। तासु प्रह्लाद-राक्षसढुँढी-राधाकृष्णरास-कामदेवपुनर्जन्मादिकथाः प्रसिद्धाः भवन्ति। भारतीयज्योतिषशास्त्राधारेण चैत्र-शुक्लप्रतिपत्तिथितः नववर्षस्यारम्भो भवति। अयं कालः वसन्तागमनस्य प्रतीकभूत इति मन्यते। अस्मिन् दिने एव विश्वस्य प्रथमपुरुषः मनुरजायत इति हेतोः इयं तिथिः मन्वादितिथिः इत्यप्युच्यते। एतादृशस्य वसन्तोत्सववस्य परिपालनम् ओडिशाराज्ये कथं भवति तदत्र स्थलीपुलाकन्यायेन किञ्चिदुपस्थाप्यते।

### ओडिशाराज्ये वसन्तोत्सवः

भारतस्य राज्यान्तरेष्विव ओडिशाराज्येऽपि वसन्तोत्सवस्य साडम्बरं परिपालनं क्रियते। अत्र उत्सवोऽयं ''दोलपूर्णिमा'' इति निगद्यते। आंग्लसमयसारिण्याधारेण अयं फरवरीमासे अथवा मार्चमासे समनुष्ठीयते। हिन्दूनां चन्द्रसमयसारिण्याधारेण फाल्गुनमासे दशमीतिथौ अस्य पर्वणः आरम्भो भवति। दिवसोऽयं ''फल्गुदशमी'' इति नाम्ना

उत्कलीयैः अभिधीयते। एवमस्य समाप्तिः पूर्णिमायां तिथौ रात्रौ समपद्यते। एवं पूर्णमीतिथिः ''दोलपूर्णमी'' कथ्यते।

**यात्राभागवते उच्यते -**

**दशमीदिनमारभ्य यावत्पंचदशी भवेत्।**
**फाल्गुनस्य सिते पक्षे फल्गुयात्रा हरेर्भवेत्।।**

श्रीवैष्णवानां पर्व इदम् ओडिशावास्तव्यैः पारम्परिकशैल्या परिपाल्यते। परम्परेयं प्रायशः पश्चिमबङ्गप्रदेशस्थैः समरूपेण समनुष्ठीयते। ओडिशाराज्ये श्रीजगन्नाथः प्रधान इष्टदेवो भवति। तत्रोपकूलवर्तिग्रामनगरीषु उत्सवोऽयमतीव लोकप्रियोऽस्ति। राष्ट्रस्यान्यप्रान्तेषु यद्यपि इदं पर्व केवलम् एकस्य दिनस्य कृते एव प्रचलति, तत्र ओडिशाराज्ये पञ्चदिनानां कृते भवति। फल्गुदशम्यां ''भोमाना'' इति ख्याते विमाने भगवतः मदनमोहनस्य प्रतिमाः संस्थाप्य दोलवेदिकां प्रति भक्ताः सेवकाः नयन्ति। गमनमार्गे शोभायात्रायां विमानं प्रत्येकं गृहस्य समीपे संस्थाप्यते। गृहस्वामिना मदनमोहनस्य कृते मिष्टान्न-फल्वादि पूजार्थं समर्प्यते। रङ्गक्रीडया साकं घण्ट-मृदङ्ग-तुरी-भेर्यादिवाद्यवादनं; ''हरिवोल'', ''हुलहुलि'' इत्यादि शब्दोच्चारणं; नृत्यञ्च विधाय सर्वे आनन्दसागरे निमज्जन्ति। मूर्तयः स्वर्णाभूषणैस्सज्जीक्रियन्ते। विमानान्यपि पुष्प-पत्र-रङ्गवस्त्र-कर्गजैः विमण्ड्यन्ते। एतादृशी यात्रा उत्कलभाषया ''दोलमेलणम्'' अथवा ''दोलायात्रा'' इति कथ्यते।

श्रीक्षेत्रे पुरीधाम्नि श्रीजगन्नाथस्य ''चाचेरीक्रीडा'' दशमीतिथितः प्रारभ्यते। ततः प्रारभ्य दोलिकाविमानस्योपरि मदनमोहनः, श्रीलक्ष्मीः, सरस्वती च दोलवेदिकां प्रति नीयन्ते। श्रीमन्दिरस्य दोलगोविन्देन साकं भूदेवी, श्रीदेवी च स्वतन्त्रविमानेन जगन्नाथवल्लभाख्यमुद्यानं गच्छन्ति। तत्रैव श्रीजगन्नाथस्य चाचेरीक्रीडा प्रचलति। ''चाचेरी'' इति शब्दः वेङ्गलीभाषातः उद्धृतः। अस्यार्थो भवति गीतवाद्यैस्साकं हर्षोल्लासैः नर्तनम्। एतदभ्यन्तेर दोलवेदिकायाम् ओडिशाराज्यस्य सुप्रसिद्धलोकनृत्यं ''वादिपाला'' आयोज्यते। यत्र गायकः अनुकारिभिस्साकं पौराणिककथाः ओडिभाषया रचितैः पद्यैः श्रावयति। वस्तुतः एषा दोलायात्रा श्रीजगन्नाथस्य द्वादशयात्रासु अन्यतमा। यथोच्यते-

**दोलायात्रा दमनकमहोऽक्षय्यपुण्या तृतीया**
**मञ्चस्नानं रथवरगतिः शायनं चायने द्वे।**
**पार्श्वावृत्तिः शयननिवृतिः प्रावृतिः पुष्यपूजा**
**चैवं यात्रा विधिनिगदिता द्वादशैताः नरेन्द्र।।**

**(स्कन्दपुराणम्)**

फल्गुदशमीतः प्रारब्धोऽयमुत्सवः पौर्णमीतिथेः रात्रौ समाप्यते। समाप्तिकाले ग्रामेषु स्थिते दोलामण्डपे नैके भक्तजनाः ग्रामवासिनः उपस्थिताः भवन्ति। सोऽयं भक्तसमावेशः प्रान्तीयभाषया ''मेलण'' इत्युच्यते। भक्ताः स्कन्धोपरि विमानमुत्थापयन्ति। अस्मिन् समये क्रियमाणं प्रसिद्धं नृत्यं ''दाण्डी'' इति कथ्यते। समावेशे गृहोपकरणानां, क्रीडनकानाम्, नित्यव्यवहार्यवस्तुनाम्, कृष्युपकरणानाम्, मिष्टान्नानाञ्च क्रयविक्रयणमपि भवति। सर्वेषां देवदेवीनां परस्परमेलनानन्तरं पञ्जिकापाठः क्रियते। आगतवर्षेषु घट्यमाननां गुरुत्वपूर्णघटनानां चर्चा क्रियते। चतुर्दशी तिथौ अग्नौ होलिकायाः प्रतिमां संस्थाप्य दह्यते। ततः परस्मिन् दिने सर्वैः रङ्गक्रीडा सम्पाद्यते। एवं महताडम्बरेण परिपालितस्यास्योत्सवस्य फलश्रुतिः क्रियते यात्राभागवते-

**चामरान्दोलनैर्गीतैः स्तुतिभिश्च समर्चितम्।**
**आन्दोलयेद्दोलिकास्थं सप्तवारांच्छनैः शनैः।।**
**तदा पश्यन्ति ये कृष्णं मुक्तिस्तेषां न संशयः।**
**ब्रह्महत्यादिपापानां पञ्चकानां क्षयो भवेत्।।**
**त्रिरेवं दोलयेद्देवं सर्वपापापनोदनम्।**
**भक्त्यानुग्राहकं पुंसां भुक्तिमुक्त्येककारणम्।।**
**लीलाविचेष्टितं यस्य कृत्रिमं सहजं तथा।**
**अंहःसंघक्षयकरं मूलाविद्यानिवर्त्तकम्।।**
**पश्यन्द्वितीयं हरति गोहत्याद्युपपातकम्।**
**हरत्यशेषपापानि तृतीये नात्र संशयः।।**
**दृष्ट्वा दोलायितं देवं सर्वपापैः प्रमुच्यते।**
**आध्यात्मिकैराधिभौतैराधिदैवै र्विमुच्यते।।**
**इमां यात्रां कारयित्वा चक्रवर्त्ती भवेन्नृपः।**
**ब्रह्मणस्तु चतुर्वेदी ज्ञानवाञ्जायते ध्रुवम्।**
**वैश्यस्तु धान्यधनवान् शूद्रः शुध्येत पातकात्।।**

**(स्कन्दपुराणम्)**



# आरोग्यस्य रहस्यम्

- श्री कृष्णकिशोरः
चरवाणी - ७०१३४४८०७२





एकस्मिन् ग्रामे एकः आश्रमः अवर्तत। बहवः छात्राः तत्र शिक्षां गृह्णन्ति स्म। नानाशास्त्रपारदृश्यानः अनेके आचार्याः तस्मिन् आश्रमे विविधविषयान् अपाठयन्। आश्रमस्य अध्यक्षः सदानन्दनामा एकः यतिः आसीत्। तस्य एकं धनाढ्यं मित्रं पार्श्वस्थनगरे प्रतिवसति स्म।

एकदा तेन मित्रेण चिन्तितं यद् ग्रामे तु चिकित्साव्यवस्था नास्ति। यदि कश्चित् छात्रः रुग्णः भवति, तदा सदानन्दः तस्य चिकित्सायै किमपि कर्तुं न शक्नोति। अतः तत्र चिकित्सकः प्रेषणीयः इति।

सप्ताहानन्तरम् तेन एकः योग्यचिकित्सकः तत्र प्रेषितः। सदानन्दः प्रेम्णा तस्य आतिथ्यं चकार। आश्रमस्य समीपे तस्य निवासव्यवस्थाम् अपि व्यधात्।

दिनद्वयं गतम्, सप्ताहः अतिक्रान्तः, किन्तु कोऽपि छात्रः रुग्णः भूत्वा वैद्यं न उपाययौ। क्रमशः मासत्रयं व्यतीतम्। कस्यापि रुजार्तस्य दर्शनं न जातम्। चिकित्सकः अतीव खेदम् अवाप, सदानन्दं च पप्रच्छ-यतिवर! मासत्रयात्पूर्वम् अहम् अत्र छात्राणां चिकित्सार्थं समागतः। किन्तु न अद्यावधि कश्चिद् रुग्णः मां प्राप्तः। किमत्र कारणम्?

सदानन्दः विहस्य ब्रूते - वैद्यराज! स्वस्थः नरः औषधं न सेवते। वैद्यः पुनः अपृच्छत्-किमत्र कोऽपि रुग्णः न भवति? सदानन्दः प्रतिवचनम् अदात् - अत्र छात्राः तीव्रक्षुधानुभूतिं विना भोजनं न अश्नन्ति। तृप्तेः पूर्वम् एव किंचिद् भोजनं त्यजन्ति, अतः ते रोगभाजः न भवन्ति।

तस्य वचनं श्रुत्वा वैद्यराजः निरुत्तरः सन् स्वनगरं प्रति प्रस्थितः।

अनारोग्यम् अनायुष्यम् अस्वर्ग्यं चातिभोजनम्।
अपुण्यं लोकविद्विष्टम् तस्मात् तत् परिवर्जयेत्।।





चित्रकथा

# अवाचिजीवानां अपवर्गः

तेलुगुमूलम् - श्री डी.श्रीनिवास दीक्षितुलु
चित्राणि - श्री के.तुलसीप्रसादः
संस्कृतानुवादः - कुमारी एस्. अभिक्या
चरवाणी - ७३८२७६३९६०

1 पुरा ब्रह्मदेवस्य शापवशात् ऊर्जनाभाख्यः राजा जालिकरूपेण पृथिव्यां जन्म अलभत। गजारण्ये बिल्ववने श्रीफलवृक्षे एषः कृमिः वसति। तदा सः कृमिः.....




3 अग्निमदेने अर्चकेण स्थापितं दीपं दृष्ट्वा जालिकः.....




5 दीपोन्नतिं निवारयितुं यदा सः ज्वाले प्लवति तदा महेश्वरः आविर्भूय..




7 शिवस्य कण्ठे स्थितः सर्पः अपचारं कृत्वा शापवशात् भुवि जननमवाप।




9 कतिपयवर्षेभ्यः अनन्तरं शिवकिङ्करः गजः दोषम् आचर्य पार्वत्याः शापकारणात् बिल्ववनं गतः।





वासनाद्वासुदेवस्य वासितं भुवनत्रयम्।

11 आदौ सर्पः नद्यां स्नानं कृत्वा बिल्वपत्राणि आनीय शिवलिङ्गस्य उपरि संस्थाप्य पूजां करोति। तत्पश्चात् गजः स्वशुण्डेन जलं आनीय...




13 प्रतिदिनं पूजां कुर्वन्तौ मूकजीवौ परस्परं विरोधिनौ सञ्जातौ। सर्पः चिन्तयति.......




15 तदनन्तरं सर्पविषये ज्ञात्वा गजः एवं चिन्तयति....




17 अपरस्मिन् दिने गजे शुण्डेन शिवस्य अभिषेचनकाले सर्पः शुण्डे प्रविशति। तदा कुञ्जरः स्वशुण्डं स्वयं भूमौ ताडयन्...




19 सर्पः गजस्य कुम्भस्थलं प्रविशति। तदा हस्तिः स्वयं शिरः भूमौ ताडयति।




22 पूजार्थं युद्धं कृत्वा फणिः मातङ्गश्च मृतौ। तदा शिवपार्वती प्रत्यक्षीभूत्वा....










अस्य चित्रपटस्य रञ्जनं कुर्मः वा?

प्रदत्तं चित्रपटम् अधोनिर्दिष्टप्रदेशे स्थापयामो वा?



चित्रलेखनम्



## रसप्रश्नाः

१. रामायणे कनिष्टं काण्डं किम्?

अ. उत्तरकाण्डम्  आ. बालकाण्डम्
इ. युद्धकाण्डम्  ई. अरण्यकाण्डम्

२.रामायणस्य नामान्तरं किम्?

अ. असुरवधम्  आ. दशवधम्
इ. पुलस्त्यवधम्  ई. पौलस्त्यवधम्

३. जनकस्य मूलनाम किम्?

अ. विष्णुध्वजः  आ. सीरध्वजः
इ. वज्रध्वजः  ई. सीताध्वजः

४. अशोकवनस्य नामान्तरं किम्?

अ. नन्दनवनम्  आ. रामवनम्
इ. प्रमदावनम्  ई. खाण्डववनम्

समाधानानि - १. ई २. ई ३. आ ४. इ







सप्तभेदाः कुत्र?











Printed by Sri P. Ramaraju, M.A., and Published by Dr. K. Radha Ramana, M.A., M.Phil., Phd., on behalf of Tirumala Tirupati Devasthanams and Printed and Publised at Tirumala Tirupati Devasthanams Press, K.T. Road,Tirupati 517 507.
Editor : Dr.V.G. Chokkalingam, M.A., Ph.D.

तिरुमलतिरुपतिदेवस्थानानि




# तिरुपति श्रीकोदण्डरामस्वामिनः ब्रह्मोत्सवः

२०२२ मार्च् ३० तः एप्रिल् ०७ पर्यन्तम्

| | | |
|---|---|---|
| ३०-०३-२०२२<br>सौम्यवासरः<br>प्रातः -<br>ध्वजारोहणम्<br>रात्रौ -<br>महाशेषवाहनम् | ३१-०३-२०२२<br>बृहस्पतिवासरः<br>प्रातः -<br>लघुशेषवाहनम्<br>रात्रौ -<br>हंसवाहनम् | ०१-०४-२०२२<br>भृगुवासरः<br>प्रातः -<br>सिंहवाहनम्<br>रात्रौ -<br>मौक्तिकमण्डपम् |
| ०२-०४-२०२२<br>मन्दवासरः<br>प्रातः -<br>कल्पवृक्षवाहनम्<br>रात्रौ -<br>सर्वभूपालवाहनम् | ०३-०४-२०२२<br>भानुवासरः<br>प्रातः -<br>आन्दोलिकायां<br>मोहिन्यवतारः<br>रात्रौ -<br>गरुडवाहनम् | ०४-०४-२०२२<br>इन्दुवासरः<br>प्रातः -<br>हनुमद्वाहनम्<br>रात्रौ -<br>गजवाहनम् |
| ०५-०४-२०२२<br>भौमवासरः<br>प्रातः -<br>सूर्यप्रभवाहनम्<br>रात्रौ -<br>चन्द्रप्रभवाहनम् | ०६-०४-२०२२<br>सौम्यवासरः<br>प्रातः - रथोत्सवः<br>रात्रौ -<br>अश्ववाहनम् | ०७-०४-२०२२<br>बृहस्पतिवासरः<br>प्रातः -<br>चक्रस्नानम्<br>रात्रौ -<br>ध्वजावरोहणम् |




SAPTHAGIRI (SANSKRIT) ILLUSTRATED MONTHLY PUBLISHED BY TIRUMALA TIRUPATI DEVASTHANAMS
PRINTING ON 20-02-2022 & posting at Tirupati RMS Regd.with the Registrar of Newspapers for India under RNI No.21138/1970 Postal Regd. No. TRP/154/2021-2023"
LICENCED TO POST WITHOUT PREPAYMENT No.PMGK/RNP/WPP-04(4)/2021-2023"
Posting on 5th of every month.

# तरिगोण्ड श्रीलक्ष्मीनरसिंहस्वामिनः ब्रह्मोत्सवः

## (दि.१०.०३.२०२२ तः १८.०३.२०२२ पर्यन्तम्)